*Madras Government Oriental Manuscripts Series No. 39.*

# ॥ पुरुषार्थसुधानिधिः ॥

श्रीसायणाचार्यविरचितः

# PURUṢĀRTHASUDHĀNIDHIḤ

BY

SRI SAYAṆĀCARYA



EDITED BY
T. CHANDRASEKHARAN, M.A., L.T.,
*Curator, Government Oriental Manuscripts Library, Madras.*

*(Prepared under the orders of the Government of Madras)*

1955

**Price Rs. 14-0-0**

# INTRODUCTION.

It is a well known fact to all scholars that the Puruṣārthas, which are so called on account of their being sought after by all people, are divided four-fold *viz.*, Dharma, Artha, Kāma and Mokṣa. The nature and scope and the significance of their being called Puruṣārthas deserve to be discussed as briefly as possible.

DHARMA:—

Dharma is a means for the attainment for Divine Bliss. Really what is sought after is the bliss which results from Dharma; still the name Puruṣārtha is also applied to Dharma which is only the means for attaining the desired object.

'धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपजीवन्ति धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति'
(तैत्तिरीयारण्यक. X प्रपाठक. 63 अनुवाक)

'तच्छ्रेयोरूपमत्यसृजत धर्मम्' (बृहदारण्यके I. iv. 14)

Even as a week person gains a victory over his enemy with the help of a powerful king, so also a person bereft of any other help becomes victorious with the help of Dharma alone. Hence Dharma is known as Puruṣārtha.

'तस्माद्धर्मात्परं नास्त्यथो अबलीयान् बलीयांसमाशंसते धर्मेण यथैव राज्ञैवम्' (बृहदारण्यक I. iv. 14)

Dharma is two-fold, that which is to be accomplished, *Sādhya* which includes sacrifice, gifts, offering of oblations etc., and *Siddha* which denotes Brahma. The Brahma also is referred to as Dharma.

'कृष्णं धर्मं सनातनम्' 'रामो विग्रहवान् धर्मः'

The Vedas are the authority for these two kinds of Dharma. The Sūtras defining Dharma are

'चोदनालक्षणोऽर्थो धर्मः' Mimāṁsāsūtra I. i. 2)

'शास्त्रयोनित्वात्' (Brahmasūtra I. i. 3)

In the Sūtras

'प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्' (Mīmāṁsāsūtra I. i. 4)

'तत्तु समन्वयात्' (Brahmasūtra I. i. 4)
it has been established that Dharma cannot come within the scope of Pratyakṣa since Pratyakṣa can be the means of grasping only such things which are present and nearby. Since Dharma, which results from the performance of Yoga etc., does not possess any form and it arises only at the conclusion of the sacrifice, it cannot be perceived by Pratyakṣa Pramāṇa. Hence it is also known as Adṛṣṭa. Though the sacrifice etc., can be perceived by the Indriyas, its capacity to bestow bliss on the sacrificer is known only through the Vedas. Thus the definition of Dharma *viz.*, the means for obtaining the Divine bliss is established.

Though Brahma is *Sidha,* Śāstra alone is the Pramāṇa for it. Śrī Śaṅkara Bhagavatpāda has said that Brahma is known as the cause of the creation protection and destruction of the Universe only through Śāstra. He who is ignorant of the Vedas cannot know Him.

'शास्त्रादेव प्रमाणात् जगतो जन्मादिकारणं ब्रह्मावगम्यत इत्यभिप्रायः'
'नावेदविन्मनुते तं बृहन्तम्'

Nor is Brahma capable of being inferred, since no *liṅga* or *hetu* for the establishment of Dharmādharma is known to exist. It is sought to infer the existence of Dharma and Adharma through *Sukha* and *Duḥkha,* even as fire is inferred from smoke. The relationship between *Sukhaduḥkha* on the one hand and *Dharmādharma* on the other hand is known only through the Vedas. Hence Veda alone is the authority on Dharma and Adharma.

'वेदोऽखिलो धर्ममूलम्' (Gautamadharmasūtra 1)

Brahma which is of the form of bliss and realised by knowledge is sought after by Puruṣas. Hence it is known as Puruṣārtha. The following Smṛti texts bear testimony to the nature of Brahma and its realization.

'विज्ञानमानन्दं ब्रह्म' 'रसो वै सः' 'ब्रह्मविदाप्नोति परं' 'ब्रह्म वेद ब्रह्म भवति' 'तरति शोकमात्मवित्'

Though the Vedas are the real authority on Dharma, Smṛti and others which derive authority from the Vedas are also regarded as the authority on Dharma.

The greatness of Dharma is thus described in the present work:—

'संसारार्णवमग्नस्य जन्तोस्त्रस्तस्य मृत्युतः ।
आधारो धर्म एव स्यान्न त्वर्था न च बान्धवाः ॥
अर्थबन्धुसहायोऽपि नाधर्मः स्वर्गमाप्नुयात् ।
अर्थबन्धुविहीनोऽपि धर्मिष्ठः स्वर्गमाप्नुयात् ॥
नास्ति धर्मात्परो लाभो नास्ति धर्मात्परं धनम् ।
नास्ति धर्मात्परं तीर्थं नास्ति धर्मात्परा गतिः ॥

(धर्मस्कन्ध 1 अध्याय 31-33 श्लोकाः)

ARTHA:—

The term Artha is applied to wealth, land etc., which are earned by the King in a righteous manner in order to protect the different families that have settled in his country. It also embraces everything that helps in the protection of the people. Kauṭilya has said

'पृथिव्या लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्थापितानि'

(Kauṭilya's Arthaśāstra Sūtra 1)

The term Puruṣārtha can be applied only to that Artha that is realised in a righteous manner, given to the proper persons and fit to be enjoyed and not to anything else. This has been well expressed in the present work:—

'अर्थान् धर्माविरोधेन प्राज्यधीरार्जयेदिमान् ।
दानभोगोचितान् कुर्यादन्यथा ह्यर्थदूषणम् ॥
अन्यायेनार्जितं द्रव्यमर्थदूषणमुच्यते ।
अपात्रदानं पात्रार्थहरणं तस्य लक्षणम् ॥
अदूषितार्थः सर्वत्र नृपतिः प्राप्नुयाच्छ्रियम् ।'

(अर्थस्कन्ध VIII अध्याय, 1-3 श्लो.)

If wealth has to be acquired in this manner, the king should be a Dhārmika with good ministers and servants. He must avoid bad ministers and servants. Thus in the Arthaskandha we find a description of the ministers and others. Artha becomes Puruṣārtha by being helpful to Dharma and Mokṣa.

KĀMA:—

A doubt is often raised regarding the propriety of including Kāma under Puruṣārthas. Mokṣa is the most important of the Puruṣārthas. Dharma and Artha may be regarded as Puruṣārtha by their subservience to Mokṣa. How can Kāma be regarded as a Puruṣārtha? The answer for this is not far to seek. The Universe is born of the union

between men and women. Kāma resulting in the birth of a child helps a person to discharge his debt to his ancesstors. All great men take up to Kāma by getting themselves married. Hence Kāma also is included under the Puruṣārtha by sages like Vātsyāyana and others. In the Gītā also we see Śrī Kṛṣṇa identifying himself with Kāma among people provided it is not opposed to Dharma.

'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ' (भगवद्गीता VII. 11)

According to the dictum that one should strive for at least subsidiary fruits in the absense of the primary fruit, all persons should take to Kāma and other subsidiary Puruṣārthas though they are unable to strive for Mokṣa; and for this purpose they should confine their Kāma to their own wives. Kāma of a base order is not referred to here, but sublime Kāma which is in conformity with Dharma is alone regarded as Puruṣārtha. The following verses from the Ratipradīpa will explain this aspect very well:—

'स्वस्वामिन्येव रक्ता स्यात् कामशास्त्रविशारदे ।
भवेत्पतिव्रता नारी तुष्टिं तत्रैव चाप्नुयात् ॥
एतच्छास्त्रानुसारेण यो रतिं प्राप्तुमिच्छति ।
कलादिसौष्ठवज्ञानान्मनोवेगं रुणद्धि यत् ॥
इति हेतोरिदं शास्त्रं ज्ञेयं मनसि धीजनैः ।
धर्मार्थकाममोक्षाणां प्राप्तिर्भवति निश्चितम् ॥'

MOKṢA :—

This is the final beatitude or the realization of Brahma. This is the Uttama Puruṣārtha as it is of the form of bliss unmixed with grief and free from rebirth. The enjoyment of heaven is not Mokṣa as it is mixed up with grief. This idea is well brought out in the present work :—

'शाकल:—

अस्मिन्नमुष्मिन् लोके च विशेषो नास्ति कश्चन ।
अविशेषे सतीहैव संस्थानं मे हि रोचते ॥
यथेह सततं चोरव्याघ्रतश्च वधो नृणाम् ।
स्वर्लोकेऽपि तथा दैत्यदानवेभ्यो महद्भयम् ॥
यथास्मिन् मृत्युतो मर्त्या भयं यान्ति शतक्रतो ।
तत्रापि पतनाद्भीतिस्तथैवास्ति दिवौकसाम् ॥

यथा कर्मक्षयान्मृत्युरत्र पुंसां प्रजायते ।
तथा फलोपभोगेन प्रक्षीणा स्वर्गसंस्थितिः ॥
कृते कर्मण्यनाकाङ्क्षी फलेषु विबुधाधिप ।
नरो ज्ञानमनुप्राप्य पुनर्मोक्षाय कल्पते ॥
तस्मात्साध्यविहीने मे स्वर्गे नास्ति प्रयोजनम् ।
तथात्रैव यतिष्येऽहं यथा लप्स्येऽपुनर्भवम् ॥'
(मोक्षस्कन्ध VI अध्याय, श्लो. 55, 56, 57, 59, 62, 63)

Of these four Puruṣārthas. Dharma and Mokṣa which are *Alaukikas*, are understood only from the Vedas. The term Veda is defined as the means of knowing the Puruṣārthas which are *Alaukikas*.

'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥'

The Veda is diverse and infinite. Certain subtle Dharmas may be taught in some corner of the Vedas and we may not be able to grasp them properly. To explain all these subtle Dharmas even to ordinary people, ancient sages like Manu and others, out of compassion, produced the Dharmaśāstra, Itihāsa, Purāṇa and Upapurāṇa, which are only an elaboration of the ideas contained in the Vedas.

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरेदिति ॥'

The Vedas are divided two-fold, the Pūrva and Uttara Kāṇḍas, the former explaining Dharmas which are *Sādhya* and the latter explaining the Brahma which is *Siddha*. Ordinarily all people are not inclined to hear a dry-as-dust lecture on subtle truths; even if they hear, they are not able to comprehend them. If stories to illustrate the truths are narrated, all will be able to understand them easily. Only for this purpose the sages wrote the Ithāsas and Purāṇas.

There are 18 famous Purāṇas and an equal number of Upapurāṇas, each consisting of thousands of Granthas. On account of the gradual degeneration of people with reference to longivity of life, health, strength, power, belief etc., they are not able to study all the Purāṇas and determine for themselves what should be done and what should not be done. In order to teach such people the four-fold Puruṣārthas, Śrī

योग्यतास्ति। अत एवादृष्टमिति च सर्वेऽभिदधति। अथ वा, यागादेः स्वरूपस्ये-न्द्रियगम्यत्वेऽपि तस्य श्रेयःसाधनत्वं वेदेनैवावसेयम् । इदमभिप्रेत्यैवालौकिक-श्रेयःसाधनताकत्वं धर्मलक्षणतया पर्यष्काषुः ॥

ब्रह्मणः सिद्धस्यापि शास्त्रैकप्रमाणकत्वं प्रतिपादयामासुर्भगवत्पादाः 'शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्मावगम्यत इत्यभिप्रायः' इति व्याचक्षाणाः । श्रूयते च 'नावेदविन्मनुते तं बृहन्तम्' इति । धर्माधर्मयोः साधकलिङ्गविरहान्नानुमानगम्यत्वम् । सुखदुःखरूपकार्याभ्यां धूमेन वह्नेरिव धर्माधर्मयोरनुमानमस्त्विति चेत्, अयमपि साध्यसाधनभावो वेदेनैवावसीयते । अतो वेद एव धर्माधर्मयोः प्रमाणम्। 'वेदोऽखिलो धर्ममूलम्' इति 'अशुद्धमिति चेन्न शब्दात्' इति चास्मार्षुः ॥

ब्रह्म च स्वतः सुखरूपम्, स्वज्ञानगम्यं पुरुषेणेष्यमाणत्वात् पुरुषार्थः । तदुभयरूपत्वं च 'विज्ञानमानन्दं ब्रह्म' 'रसो वै सः' 'ब्रह्मविदाप्नोति परम्' 'ब्रह्म वेद ब्रह्म भवति' 'तरति शोकमात्मवित्' इत्यादिभिरवगम्यते । तदेवं धर्मे मुख्यप्रमाणं वेदा एव । तन्मूलत्वाच्च स्मृत्यादयोऽपि ॥

धर्मस्य महिमानमधिकृत्य प्रकृतग्रन्थकृताप्युक्तम्—

'संसारार्णवमग्नस्य जन्तोस्त्रस्तस्य मृत्युतः ।
आधारो धर्म एव स्यान्न त्वर्था न च बान्धवाः ॥
अर्थबन्धुसहायोऽपि नाधर्मः स्वर्गमाप्नुयात् ।
अर्थबन्धुविहीनोऽपि धर्मिष्ठः स्वर्गमाप्नुयात् ॥
नास्ति धर्मात् परो लाभो नास्ति धर्मात् परं धनम् ।
नास्ति धर्मात् परं तीर्थं नास्ति धर्मात् परा गतिः ॥' इति ।

(धर्मस्कन्ध, अध्याय. I. श्लो. 31—33)

## अर्थः

धर्मिष्ठः कार्यकुशलः परकीयकपटप्रतिविधानक्षमश्च विद्वानेकः कुटुम्बी यथा एकं कुटुम्बं रक्षति, तथा स्वदेशगतानि बहूनि कुटुम्बानि रक्षितुं राजा न्याय्येन मार्गेण यद् धनभूम्यादिकं सम्पादयति सः अर्थ इत्युच्यते । अर्थशब्देन धनेन सह प्रजापालनौपयिकं सर्वमुपलक्ष्यते। अत एवोक्तं कौटिल्येन 'पृथिव्या लाभे पालने च यावन्त्यर्थशास्त्राणि पूर्वाचार्यैः प्रस्थापितानि' इति । न्यायार्जितः पात्रे देयः भोगोचित एवार्थः पुरुषार्थः नान्य इत्येतत् सायणाचार्यैः प्रकृतग्रन्थेऽर्थस्कन्धे उक्तम्—

'अर्थान् धर्माविरोधेन प्राज्यधीरार्जयेदिमान् ।
दानभोगोचितान् कुर्यादन्यथा ह्यर्थदूषणम् ॥
अन्यायेनार्जितं द्रव्यमर्थदूषणमुच्यते ।
अपात्रदानं पात्रार्थहरणं तस्य लक्षणम् ॥
अदूषितार्थः सर्वत्र नृपतिः प्राप्नुयाच्छ्रियम् ।' इति ।
(अर्थस्कन्ध, अध्याय. VIII. श्लो. 1—3)

एवमर्थः सम्पादनीयश्चेद् राज्ञा स्वयं धार्मिकेण भवितव्यम् । तदर्थाः सदमात्यभृत्यपरिकराश्च तस्यावश्यकाः । दुष्टामात्यभृत्याश्च परिहर्तव्याः । अत एवार्थस्कन्धे अमात्यादिकथनम् । धर्ममोक्षयोरुपयोगित्वादर्थः पुरुषार्थः । विना ह्यर्थं को नाम धर्मो यथावत् कर्तुं शक्यः ? ॥

## कामः

अयं सर्वत्र प्रसिद्धः । परं तु केचिदेवमाशङ्केरन्—'अखण्डनिरतिशयानन्दावाप्तिलक्षणत्वेनाभ्यर्हितत्वात् मोक्षपुरुषार्थ एव मुख्य इति सकलमतसिद्धान्तः । तदुपयोगितया अस्तु नाम कथञ्चिद्धर्मार्थयोरपि पुरुषार्थत्वम् । कामस्तु कथं पुरुषार्थः ?' इति । अत्रोच्यते । प्रसूतिभाजो विश्वस्य स्त्रीपुरुषाभ्यामेव निष्पन्नत्वात्, कामस्य पितृऋणविमोचनहेतुतया सततं महापुरुषपरिग्रहात् कामोऽपि पुरुषार्थ इति वात्स्यायनादिपूर्वमहर्षिसिद्धान्तः । गीतञ्च भगवता—भगवद्गीतासु—

'धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ।' इति ।

एवं सति मुख्यकल्पस्यालाभे अनुकल्पस्यापि विहितत्वात् मोक्षपुरुषार्थसाधनप्रवृत्त्यलाभे कामपुरुषार्थसाधनेषु वा अवश्यं प्रवृत्तिः कर्तव्येत्यनुसन्धायैव स्वस्वदारेषु कामपुरुषार्थ उपन्यस्तः । किं च पशुपक्ष्यादिष्वपि ग्राम्यधर्मः साधारणः । मनुष्यास्तु कामकलाभिज्ञानेनातीवानन्दिनो भवन्ति । यद्यपि 'पूर्वं हि मानस्यः प्रजाः समभवन्, ततोऽपत्यैकप्रयोजनमैथुनसम्भवाः, ततः कामावर्जनीयसन्निधिजन्मानः, इदानीं देशकालाद्यव्यवस्थया पशुधर्मादेव भूयिष्ठाः' इति कुसुमाञ्जलिकारोक्तरीत्या इदानीं पशुसधर्माणः केचिद्भवन्ति । तथापि न तादृशः कामः पुरुषार्थशब्दव्यपदेशयोग्यः । अतः स्त्रियः पतिव्रताः, पतयस्त्वेकपत्नीव्रतपरा भवेयुः । तादृशानां काम एव च पुरुषार्थः ॥

तदुक्तं रतिप्रदीपे—

स्वस्वामिन्येव रक्ता स्यात् कामशास्त्रविशारदे ।
भवेत् पतिव्रता नारी तुष्टिं तत्रैव चाप्नुयात् ॥
एतच्छास्त्रानुसारेण यो रतिं प्राप्तुमिच्छति ।
कलादिसौष्ठवज्ञानान्मनोवेगं रुणद्धि यत् ॥
इति हेतोरिदं शास्त्रं ज्ञेयं मनसि धीजनैः ।
धर्मार्थकाममोक्षाणां प्राप्तिर्भवति निश्चितम् ॥ इति ॥

अथवास्त्वन्ततो ग्राम्यधर्मसम्पाद्योऽपि पुरुषैः प्राकृतैरर्थ्यत एवेति पुरुषार्थः प्रलोभनार्थाय ॥

## मोक्षः

स च ब्रह्मावाप्तिलक्षणः । अयं निरतिशयानन्दरूपत्वाद् दुःखासम्भिन्नत्वात् पुनरावृत्त्यहेतुत्वाच्च उत्तमः पुरुषार्थ इति त्रय्यन्तनिष्णातानां सिद्धान्तः । स्वर्गादिसुखान्यपि हि दुःखमिश्राण्येव । इममर्थं प्रकृतग्रन्थकारो मोक्षस्कन्धे सुस्पष्टं निरूपयामास । इह केचन श्लोकाः सौकर्याय निर्दिश्यन्ते—

"शाकलः—

अस्मिन्नमुष्मिन् लोके च विशेषो नास्ति कश्चन ।
अविशेषे सतीहैव संस्थानं मे हि रोचते ॥
यथेह सततं चोरव्याघ्रतश्च वधो नृणाम् ।
स्वर्लोकेऽपि तथा दैत्यदानवेभ्यो महद्भयम् ॥
यथास्मिन् मृत्युतो मर्त्या भयं यान्ति शतक्रतो ।
तत्रापि पतनाद्भीतिस्तथैवास्ति दिवौकसाम् ॥
यथा कर्मक्षयान्मृत्युरत्र पुंसां प्रजायते ।
तथा फलोपभोगेन प्रक्षीणा स्वर्गसंस्थितिः ॥
कृते कर्मण्यनाकांक्षी फलेषु विबुधाधिप ।
नरो ज्ञानमनुप्राप्य पुनर्मोक्षाय कल्पते ॥
तस्मात् साध्यविहीने मे स्वर्गे नास्ति प्रयोजनम् ।
तथात्रैव यतिष्येऽहं यथा लप्स्येऽपुनर्भवम् ॥'

(मोक्षस्कन्ध, अध्याय. VI. श्लो. 55,56,57,59,62,63) इति ॥

तदेवं निरूपितेषु चतुर्षु पुरुषार्थेषु धर्ममोक्षावलौकिकौ वेदैकगम्यौ । अलौकिकपुरुषार्थोपायं वेदयनेनेति वेदशब्दव्युत्पत्तेः ॥

यदाहुः—

प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥ इति ।

सोऽयं वेदो नानाप्रकरणमयोऽनन्तश्च । 'अनन्ता वै वेदाः' इति हि श्रूयते । तत्तत्प्रकरणे क्वापि कोणे प्रसङ्गात् केऽपि सूक्ष्मा धर्मा उपदिष्टा भवेयुः । प्रकरणस्यान्यदीयत्वात् कोणस्थितसूक्ष्मधर्मग्रहणे न वयं प्रभवः । दृष्टान्तार्थमेकं स्थलं प्रदर्श्यते । चयनप्रकरणे अश्वगर्दभसंयोजिते शकटे इष्टकानयनवेलायाम् अश्वस्य गर्दभात् पुरतो गमनं विधत्ते वाक्यमिदं—'पापवस्यसं वा एतत् क्रियते यच्छ्रेयसा च पापीयसा च समानं कर्म कुर्वन्ति पापीयान् ह्यश्वाद्गर्दभोऽश्वं पूर्वं नयन्ति पापवस्यसस्य व्यावृत्त्यै तस्माच्छ्रेयांसं पापीयान् पश्चादन्वेति' इति । इदं च वाक्यं सायणाचार्यैरित्थं व्याख्यातम्—'श्रेयसोत्तमेन साधनेन, पापीयसा निकृष्टेनापि साधनेन, समानं तुल्यमेकं कार्यं कुर्वन्तीति यत् तदेतत् पापवस्यसमेव क्रियते । अत्यन्तं निकृष्टमित्यर्थः । गर्दभोऽश्वात् पापीयानिति प्रसिद्धम् । अत उभयोः समानं गमनं मा भूदिति अश्वं पुरतो नयेयुः । यस्मादेवं तस्मात् लोकेऽपि विद्याधनादिभिः श्रेयान् पुरुषः पुरतो गच्छति निकृष्टः शिष्यो दरिद्रो वा पश्चादनुगच्छति' इति । अनेन गुरोः पृष्ठत एव शिष्यस्य गमनमिति महान् धर्मः प्रतिपादितः । अमुमेव श्रीमद्रामायणेऽन्यत्र च 'पृष्ठतोऽनुजगाम ह' इति बहुषु स्थलेषूपबृंहयामासुः ॥

एवं वेदानामनन्तत्वात् नानाशाखामयत्वात् विप्रकीर्णतयोपलभ्यमानत्वाच्च परिमितमतीनां ततो निर्णयपर्यवसायी बोधो न स्यादित्यालोच्यैव परमकारुणिका अतीन्द्रियार्थद्रष्टारश्च मनुव्यासादयो वेदोपबृंहणात्मकानि धर्मशास्त्रेतिहासपुराणोपपुराणानि न्यबध्नन् । पुराणानां वेदार्थज्ञानोपयोगश्च—

'इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।
बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरेदिति ॥'

इत्यनेन दर्शितः । तत्र पूर्वोत्तरकाण्डात्मना विभक्तस्य वेदस्य पूर्वकाण्डार्थप्रकाशकानि धर्मशास्त्राणि । पूर्वभागोदितधर्मप्रकाशनेन सह वेदान्तभागस्याप्युपबृंहणानि इतिहासपुराणोपपुराणानि । सामान्यतो लोके तत्त्वार्थमात्रोपदेशे कृते सर्वेषामपि न श्रवणौन्मुख्यं भवति, मनसि च सोऽर्थो न दृढमवगतो भवति । तत्त्वार्थमुक्त्वा तस्य सुखावगमाय समुचितो दृष्टान्तस्तत्तदर्थानुष्ठानाननुष्ठानप्रयुक्तेष्टानिष्टबोधकपूर्ववृत्तकथाश्च यदि कथ्येरन् सर्वेषां तादृशग्रन्थाव-

लोकनश्रवणयोर्महती श्रद्धा जायते । इममुपायं मनसिकृत्यैव इतिहासपुराणान्यारचयामासुः । अद्यापि इतिहासपुराणश्रवणे बद्धौत्सुक्यान् तच्छ्रवणसञ्जातपरिपक्वमनसश्च बहून् जनानध्यक्षयामः ॥

परं तु तान्यपि प्रसिद्धान्यष्टादश पुराणान्युपपुराणानि च प्रत्येकमनेकसहस्रसंख्याकग्रन्थमयानि परिदृश्यन्ते । सर्वेषामेव जनानामायुरारोग्यबलवीर्यश्रद्धाशमदमग्रहणधारणादिशक्तेरहरहरपचीयमानतया तानि सर्वाण्यालोक्य कार्याकार्ये निश्चेतुमशक्ता एवाल्पमेधसो जनाः सम्पन्नाः । तानप्यधिकारिणश्चतुर्विधान् पुरुषार्थान् बोधयितुमेव चतुर्वेदभाष्यादिबहुतरप्रबन्धनिर्माणेन सर्वतः प्रसृमरयशाः श्रीसायणाचार्यः पुरुषार्थसुधानिधिनामानमपूर्वं पद्यमयं प्रबन्धं प्रणिनाय, य इतः प्रागप्रकाशितोऽस्माभिरिदानीं मुद्राप्य प्राकाश्यं नीयते ॥

सर्वविद्यानिलयः श्रीमाधवाचार्यः तत्त्वविदो बुक्कभूपतेः कुलगुरुः मन्त्री चासीत् । तं कदाचित् स राजा पप्रच्छ—'गुरो ! भवन्मुखाद्विविधानि शास्त्राणि पुराणोपपुराणभारतानि च श्रुतानि । परं तु तानि पुरुषार्थार्थिनां मितमतीनां गहनानि । अतः सर्वेषामप्यनायासेन पुरुषार्थबोधनानि आख्यानरूपाणि व्यासवाक्यानि मे ब्रूहि' इति ॥

तदिदमाकर्ण्य माधवाचार्यः परया मुदा युक्तः—'राजन् ! विदुषामग्रगण्यो ममानुजः सायणाचार्यो वर्तते । पुराणोपपुराणेषु विद्यमानाः सर्वा अपि कथास्तस्मै मया प्रागेवोपदिष्टाः । स तुभ्यं कथयिष्यति ' इत्युक्त्वा सायणार्यमुदैक्षत । सोऽप्यग्रजन्मनोऽनुज्ञां शिरसा वहन् पुराणेषु बह्वीनां कथानां सद्भावेऽपि या अत्यन्तमुपयुक्ताश्चतुर्विधपुरुषार्थसम्बन्धिन्यश्च कथास्ताः संक्षिप्य कथयामास । तत्कथापुञ्ज एवार्जुनायोपदिष्टा गीतेव पुरुषार्थसुधानिधिनाम्ना सकलजनोपजीव्यो विराजते । सर्वमिदं ग्रन्थारम्भे उक्तम्—

'तस्य तद्वचनं श्रुत्वा युक्तार्थं बुक्कभूपतेः ।
प्रशस्य तं मुदा युक्तो माधवः प्रत्यभाषत ॥
शृणु त्वं भव्यया बुद्ध्या वाचं मे पुरुषार्थदाम् ।
अयं हि कृतिनामाद्यः सायणार्यो ममानुजः ॥
पुराणोपपुराणेषु पुरुषार्थोपलिप्सुना ।
उपदिष्टो मया राजन् कथास्ते कथयिष्यति ॥
इति प्रसाद्य राजानं सायणार्यमुदैक्षत ।
सायणार्योऽग्रजन्मत्वात् प्राह बुक्कमहीपतिम् ॥

उपाख्यानानि कृष्णेन कथितान्यतिविस्तरात् ।
तान्येवात्रोपयुक्तानि संक्षिप्य कथयामि ते ॥
अयं वेदार्थसमितः पुरुषार्थसुधानिधिः ।
भुक्तिं मुक्तिं च कुरुते शृण्वतां पठतामपि ॥" इति ।

पुरुषार्थोपयोगिनीनां सुधारूपाणां कथानां निधित्वादयं ग्रन्थः पुरुषार्थसुधानिधिरित्याख्यायते । सुधानिधिर्यथा स्वकीयसुधापातॄन् जनानाप्याययति, तथायं पुरुषार्थसुधानिधिरपि संसारानलसन्तप्तान् स्वकथाश्रोतॄन् जनान्, सकलमपि तापं प्रशमय्य सन्तोषयतीत्यस्य ग्रन्थस्य सुधानिधित्वरूपणं साधु सङ्गतम् ॥

उक्तं च निगमने—
'पुरुषार्थकथाख्यानां यः सुधानामयं निधिः ।
तदिमं कथयन्त्यार्याः पुरुषार्थसुधानिधिम् ॥
संसारानलसन्तप्ताननन्यशरणान् भुवि ।
जन्तूनाप्याययति सदा पुरुषार्थसुधानिधिः ॥' इति । (निगमन 8,9)

सोऽयं ग्रन्थः स्कन्धचतुष्टयात्मा । तत्र धर्मस्कन्धे पञ्चचत्वारिंशदध्यायाः । प्रत्यध्यायमेकैको धर्मस्तत्प्रकाशकमुपाख्यानं च विलसति । अर्थस्कन्धे च त्रयोविंशतिरध्यायाः । अर्थोपयुक्तराजधर्मसद्भृत्यदुष्टभृत्यलक्षणादयस्तत्र सोपाख्यानं प्रतिपाद्यन्ते । कामस्कन्धे त्रयोदशाध्यायाः । कामपुरुषार्थोपयोगिसुलक्षणस्त्रीपरिग्रहादयस्तत्र प्रतिपाद्याः । तुरीये च मोक्षस्कन्धे एकोनविंशत्यध्यायाः । नामस्मरणमाहात्म्यतीर्थयात्राध्यात्मिकज्ञानादयस्तत्र विषयाः ॥

अयमस्य ग्रन्थस्य महिमा यत् एकैकस्मिन्नप्यध्याये आदौ विवक्षितस्य धर्मस्य स्वरूपकथनं तदनुष्ठानाननुष्ठानाभ्यामिष्टानिष्टावाप्तेरवर्जनीयत्वकथनम्, अनन्तरमुक्तार्थे उपाख्यानं वदामीति प्रतिज्ञानम्, ततः पौराणिकाख्यानमुक्त्वा उपसंहारे अनेनोपाख्यानेन अस्य धर्मस्य एतत्फलावगमात् सर्वैरयं धर्मो न त्याज्य इति कथयित्वाध्यायसमापनमिति । कस्य नाम कठोरहृदयस्याप्यनया रीत्योपन्यसने सति विवक्षितोऽर्थो नावगम्येत । अतोऽयं पुरुषार्थसुधानिधिर्नूनं समेषामुकारको भविष्यतीति मन्यामहे । प्रायेणेहत्याः श्लोकाः प्रत्यध्यायमुपक्रमोपसंहारगतभागौ विना उपाख्यानप्रख्यापनप्रवृत्ताः कतिचित्स्थलावलोकनेन पुराणस्थश्लोकानुपूर्वीतो न भिद्यन्ते । तत्रत्याः प्रकृतानुपयुक्ताः केचन श्लोकाः इह त्यक्ता अपि स्युः । अत्र प्रतिस्कन्धमादौ तत्तत्स्कन्धगताध्यायार्थो

अध्यायक्रमेण संगृहीताः । प्रायेणेह सर्वेषु पुराणेषु विद्यमानानि पुरुषार्थोपयोगीन्युपाख्यानान्यभिहितानि । अत एतत्पठने सर्वाणि पुराणानि पठितप्रायाणि । इदमप्यन्ते ग्रन्थकृतैवोक्तम्—

'य इमं शृणुयान्नित्यं पुरुषार्थसुधानिधिम् ।
स हि सर्वपुराणार्थश्रवणस्य फलं लभेत् ॥' इति । (निगमन. 3.)

अस्य च ग्रन्थस्य मुद्रापणे आदर्शतयोपयुक्ताश्चत्वारः कोशाः—

(1) मद्रपुरराजकीयप्राच्यहस्तलिखितपुस्तकभाण्डागारस्थः काकदपत्रमयः प्रायः शुद्ध एकः (D. 2470) । अयं पाठान्तरनिदर्शनस्थले अ. इति निर्दिश्यते । अत्र कोशे बहूनि स्थलानि त्रुटितानि । तञ्जापुरकोशात् तानि पूरितानि ॥

(2) तञ्जापुरविराजमानसरस्वतीमहाल्कोशागारस्थं काकदपत्रलिखितं पुस्तकद्वयम् । तत्र प्रतिस्कन्धं पृथक् संख्या दत्ता । पाठान्तरनिदर्शने 18231, 18237, 18239, 18242 संख्याङ्कितायाः प्रतेः क. इति, 18233, 18238, 18240, 18244 संख्यायुक्तायाः प्रतेः ख. इति च चिह्नेऽस्माभिर्दत्ते ॥

(3) अडयार् - कोशागारस्थः तालपत्रात्मकः अपरः 19. N. 31 संख्याङ्कितः । अत्र कामस्कन्धप्रथमाध्यायमात्रं वर्तते । अयं ग. इति निर्दिष्टः ॥

अध्यायप्रतिपाद्यविषयानुक्रमणिका चेह संयोजिता । पार्श्वे येभ्यः पुराणेभ्य उपाख्यानान्युद्धृतानि तत्पुराणनामानि च निर्दिष्टानि । क्वचित्त्वज्ञानात् पुराणनाम न निर्दिष्टम् ॥

ग्रन्थकर्तुः श्रीमतः सयणाचार्यस्य सर्वविदितत्वात् तच्चरितकालादिकमधिकृत्य नेह प्रस्तूयते ॥

अस्य च ग्रन्थस्य मातृकानिर्माणेन पाठान्तरनिवेशनेन नानाकोशपरामर्शपूर्वकशोधनादिना च धर्मार्थस्कन्धयोर्मुद्रापणे उपकृतवतामेतत्कोशालयस्थपण्डितानां श्रीयुतानां वैद्यनाथरामानुजमुकुन्दानां, तथा काममोक्षस्कन्धयोः प्रकाशने तथैवोपकृतवतां कल्याणसुन्दरविश्वनाथशरभेश्वरशर्मणां च कृते कृतज्ञतामावेदयामि । तथा कोशप्रदानेनोपकारमाचरितवतां सरस्वतीमहाल् कोशागाराध्यक्षाणाम्, अडयार्-कोशनिलयाधिकारिणाम्, निर्दिष्टसमये मुद्रणं सम्पादितवतां ला जर्नल् मुद्रणालयाधिकृतानां च कृते निवेद्यते कृतज्ञतेति शम् ॥

मद्रपुरी
12-5-1955

इत्थं
ति. चन्द्रशेखरः

# ॥ विषयानुक्रमणिका ॥

## ॥ धर्मस्कन्धः ॥


| अध्याय-सङ्ख्या | विषयः | आकरग्रन्थः | पुट-सङ्ख्या |
|---|---|---|---|
| 1. | धर्ममाहात्म्यकथनम् | स्कान्दपुराणम् | १ |
| 2. | भूसुरमाहात्म्यकथनम् | महाभारतम् | १४ |
| 3. | ब्राह्मणावमानकथनम् | भविष्यत्पुराणम् | १९ |
| 4. | पूर्वकर्मसम्बन्धकथनम् | मार्कण्डेयपुराणम् | २५ |
| 5. | गार्हस्थ्यश्रैष्ठ्यकथनम् | वराहपुराणम् | ३४ |
| 6. | पतिव्रताधर्मकथनम् | काशीखण्डः | ४१ |
| 7. | अतिथिसत्कारकथनम् | आग्नेयपुराणम् | ५१ |
| 8. | पञ्चमहायज्ञकथनम् | वराहपुराणम् | ५८ |
| 9. | आर्जवकथनम् | — | ६४ |
| 10. | पितृभक्तिकथनम् | पाद्मपुराणम् | ७० |
| 11. | अन्नदत्यागदूषणम् | — | ८२ |
| 12. | पितृतीर्थकथनम् | पाद्मपुराणम् | ८९ |
| 13. | गुरुतीर्थकथनम् | ” | ९४ |
| 14. | स्वामितीर्थकथनम् | ” | ११७ |
| 15. | भार्यातीर्थकथनम् | ” | १२१ |
| 16. | पुत्रतीर्थकथनम् | — | १३९ |
| 17. | पूज्यपूजाकथनम् | — | १४५ |
| 18. | तरुपुत्रमाहात्म्यकथनम् | — | १४८ |
| 19. | ब्रह्मस्वहरणदोषकथनम् | — | १५७ |
| 20. | ऋतुकालपालनकथनम् | — | १६० |
| 21. | गुरोरधर्मवचनोल्लङ्घने दोषराहित्यम् | महाभारतम् | १६५ |
| 22. | गुरावननुकूलेऽपि शुभकर्मनिर्वाहकथनम् | ” | १७५ |

| अ. सं. | विषयः | आकरग्रन्थः | पु. सं. |
|---|---|---|---|
| 23. | शिवालयनिर्माणमाहात्म्यकथनम् | स्कान्दपुराणम् | १८६ |
| 24. | देवालयसंमार्जनफलकथनम् | ,, | १९२ |
| 25. | शिवाभिषेकफलकथनम् | भविष्यत्पुराणम् | १९५ |
| 26. | गन्धोपचारफलकथनम् | स्कान्दपुराणम् | १९९ |
| 27. | पुष्पार्चनफलकथनम् | — | २०४ |
| 28. | धूपमाहात्म्यकथनम् | — | २१० |
| 29. | दीपमाहात्म्यकथनम् | विष्णुधर्मोत्तरम् | २१३ |
| 30. | नैवेद्यदानप्रशंसा | ,, | २२२ |
| 31. | गीतफलकथनम् | वाराहपुराणम् | २३० |
| 32. | जपमाहात्म्यकथनम् | महाभारतम् | २३६ |
| 33. | स्तोत्रमाहात्म्यकथनम् | सनत्कुमारसंहिता | २४१ |
| 34. | प्रदक्षिणफलकथनम् | — | २४८ |
| 35. | ध्वजारोपणफलकथनम् | शिवरहस्यखण्डः | २५४ |
| 36. | शिवपूजाफलकथनम् | — | २५७ |
| 37. | तिलदानफलकथनम् | — | २६५ |
| 38. | अन्नदानफलकथनम् | भारद्वाजसंहिता | २६९ |
| 39. | गोदानमाहात्म्यकथनम् | महाभारतम् | २७९ |
| 40. | भूमिदानफलकथनम् | भारद्वाजसंहिता | २८५ |
| 41. | कन्यादानफलकथनम् | महाभारतम् | २८८ |
| 42. | गृहदानफलकथनम् | ,, | २९१ |
| 43. | विद्यादानमाहात्म्यकथनम् | — | २९९ |
| 44. | तटाकनिर्माणफलकथनम् | भारद्वाजसंहिता | ३०४ |
| 45. | पान्थसंरक्षणफलकथनम् | — | ३१० |


## ॥ अर्थस्कन्धः ॥


| अ. सं. | विषयः | आकरग्रन्थः | पु. सं. |
|---|---|---|---|
| 1. | राजधर्मकथनम् | मात्स्यपुराणम् | ३१३ |
| 2. | स्त्रीव्यसननिन्दा | भारद्वाजसंहिता (स्कान्द) ? | ३२८ |
| 3. | अक्षव्यसननिन्दा | पाद्मपुराणम् | ३३५ |

| अ. सं. | विषयः | आकरग्रन्थः | पु. सं. |
|---|---|---|---|
| 4. | मृगयाव्यसननिन्दा | शौनकसंहिता (भारत) ? | ३३९ |
| 5. | पानदोषनिरूपणम् | महाभारतम् | ३४५ |
| 6. | वाग्दूषणदोषकथनम् | ” | ३४९ |
| 7. | दण्डपारुष्यदूषणम् | पाद्मपुराणम् | ३५६ |
| 8. | अर्थदूषणकथनम् | महाभारतम् | ३५९ |
| 9. | सत्सहायकथनम् | ” | ३६३ |
| 10. | सन्मित्रकथनम् | मार्कण्डेयपुराणम् | ३६८ |
| 11. | दुष्टभृत्यविनिन्दनम् | पाद्मपुराणम् | ३८८ |
| 12. | विश्वासघातकनिन्दा | महाभारतम् | ३९२ |
| 13. | निजभक्तवञ्चनानिन्दनम् | लैङ्गपुराणम् | ३९५ |
| 14. | अकालकृतकार्यनिन्दा | स्कान्दपुराणम् | ४०२ |
| 15. | अभयप्रदानप्रशंसा | महाभारतम् | ४०५ |
| 16. | ऋणसम्बन्धकथनम् | पाद्मपुराणम् | ४११ |
| 17. | परोपकारप्रशंसा | — | ४१९ |
| 18. | कूटसाक्ष्यदोषकथनम् | स्कान्दपुराणम् | ४२५ |
| 19. | अनुचितपदप्रार्थनादोषकथनम् | ” | ४३० |
| 20. | आश्रितापरित्यागकथनम् | ” | ४३४ |
| 21. | कृतघ्ननिन्दा | महाभारतम् | ४३९ |
| 22. | आशानिन्दा | ” | ४४६ |
| 23. | असमीक्ष्यकारितानिन्दा | ” | ४५२ |


## ॥ कामस्कन्धः ॥


| अ. सं. | विषयः | आकरग्रन्थः | पु. सं. |
|---|---|---|---|
| 1. | सुलक्षणस्त्रीपरिग्रहकथनम् | स्कान्दपुराणम् | ४५७ |
| 2. | सौदर्यप्रशंसा | ” | ४७२ |
| 3. | कामदूषणम् | महाभारतम् | ४७८ |
| 4. | कोपदूषणम् | विष्णुधर्मोत्तरम् | ४८३ |
| 5. | लोभदूषणम् | वाराहपुराणम् | ४८९ |
| 6. | मोहदूषणम् | महाभारतम् | ४९७ |
| 7. | मदनिन्दा | ” | ५०१ |

| अ, सं. | विषयः | आकरग्रन्थः | पु. सं. |
|---|---|---|---|
| 8. | मात्सर्यनिन्दा | स्कान्दपुराणम् | ५०४ |
| 9. | अन्यासक्ताङ्गनासङ्गदोषकथनम् | ब्रह्माण्डपुराणम् | ५१२ |
| 10. | कन्यकातप.कथनम् | स्कान्दपुराणम् | ५१९ |
| 11. | कन्यादूषणदोषकथनम् | वामनपुराणम् | ५२५ |
| 12. | ब्रह्महत्यादूषणम् | — | ५४१ |
| 13. | अहङ्कारदूषणम् | मात्स्यपुराणम् | ५४४ |
| 14. | पुष्पापचयनिन्दा | महाभारतम् | ५४९ |


## ॥ मोक्षस्कन्धः ॥


| अ. सं. | विषयः | आकरग्रन्थः | पु. सं. |
|---|---|---|---|
| 1. | सङ्गनिन्दा | ब्रह्माण्डपुराणम् | ५५३ |
| 2. | रागद्वेषनिन्दा | महाभारतम् | ५५९ |
| 3. | विष्णुनामस्मरणमाहात्म्यम् | भागवतम् | ५६४ |
| 4. | शिवनामोच्चारणमाहात्म्यम् | पाशुपतम् | ५६९ |
| 5. | तीर्थयात्राफलकथनम् | स्कान्दपुराणम् | ५७८ |
| 6. | अहिंसा | वाराहपुराणम् | ५८६ |
| 7. | शीलप्रशंसा | नारसिंहपुराणम् | ५९३ |
| 8. | महापुरुषदर्शनम् | — | ५९६ |
| 9. | विभूतिमाहात्म्यकथनम् | पाद्मपुराणम् | ६०१ |
| 10. | शिवपरिचर्याफलकथनम् | ” | ६०५ |
| 11. | कर्मणा मोक्षकथनम् | महाभारतम् | ६०८ |
| 12. | निर्माल्यलङ्घनदोषकथनम् | — | ६१३ |
| 13. | शिवक्षेत्रनिवासमाहात्म्यकथनम् | स्कान्दपुराणम् | ६१७ |
| 14. | शिवक्षेत्रदर्शनमाहात्म्यकथनम् | ” | ६१९ |
| 15. | शिवभक्तपूजामाहात्म्यकथनम् | ” | ६२४ |
| 16. | नियमफलकथनम् | ” | ६२६ |
| 17. | शोकनाशकथनम् | — | ६३२ |
| 18. | ज्ञानोपदेशकथनम् | विष्णुपुराणम् - भागवतम् | ६३७ |
| 19. | अध्यात्मज्ञानकथनम् | — | ६४५ |
| | निगमनम् | | ६५२ |

॥ श्रीः ॥

# ॥ पुरुषार्थसुधानिधिः ॥

## ॥ धर्मस्कन्धः ॥

### ॥ प्रथमोऽध्यायः ॥

धर्ममाहात्म्यकथनम्

[1]सत्यैकस्थविवेकवान् द्विगुणधी[2]स्त्र्यर्थी चतुर्वेदिता
पञ्चस्कन्ध[3]कृतिष्षडन्वयदृढः सप्ताङ्ग[4]सर्वार्थगः ।
अष्ट[5]व्यक्तिकलाधरो नवनिधिः पुष्यद्दशप्रत्ययः
स्मार्तोच्छ्रायधुरन्धरो [6]विजयताच्छ्रीबुक्कपृथ्वीपतिः ॥ १

इन्द्रस्याङ्गिरसो नलस्य सुमतिः शैब्यस्य मेधातिथि-
र्धौम्यो धर्मसुतस्य वैन्यनृपतेः स्वोजा निमेर्गौतमः ।
प्रत्यग्दृष्टिररुन्धतीसहचरो रामस्य पुण्यात्मनो
यद्वत्तस्य विभोरभूत्कुलगुरुर्मन्त्री तथा माधवः ॥ २

तं सर्वविद्यानिलयं तत्त्वविद्बुक्कभूपतिः ।
सत्कथाकौतुकी हर्षा[7]दवोचद्राजशेखरः ॥ ३

श्रुतानि त्वन्मुखादेव शास्त्राणि विविधानि च ।
पुराणोपपुराणानि भारतञ्च महामते ॥ ४

सर्वाण्येतानि विप्रेन्द्र गहनान्यल्पमेधसाम् ।
ज्ञातुं क्वचिन्न शक्यन्ते पुरुषार्थार्थिनामपि ॥ ५

---

1. क. ख. सत्यैकव्रतपारगो
2. क. स्त्रैण्यः । ख. त्रैय्यः
3. ख. कृती
4. क. ख. सर्वसहः
5. ख. व्यक्त
6. क. अतिजयतां ख. विजयतां
7. क. ख. दपृच्छत्

तस्मादाख्यानरूपाणि सुखोपायानि सुव्रत ।
पुरुषार्थोपयोगीनि व्यासवाक्यानि मे वद ॥ ६

तस्य तद्वचनं श्रुत्वा युक्तार्थं बुक्कभूपतेः ।
प्रशस्य तं मुदा युक्तो माधवः प्रत्यभाषत ॥ ७

[1]शृणु त्वं भव्यया बुद्धया वाचं मे पुरुषार्थदाम् ।
अयं हि कृतिनामाद्यः सायणार्यो ममानुजः ॥ ८

पुराणोपपुराणेषु पुरुषार्थोपलिप्सुना ।
उपदिष्टो मया राजन् कथास्ते कथयिष्यति ॥ ९

इति प्रसाद्य राजानं सायणार्यम् उदैक्षत ।
सायणार्योऽग्रजन्मत्वात्प्राह बुक्कमहीपतिम् ॥ १०

साधु साधु महाराज बुद्धिस्ते धर्मदर्शिनी ।
वदामि व्यासवाक्यानि लोकानां हितकाम्यया ॥ ११

उपाख्यानानि कृष्णेन कथितान्यतिविस्तरात् ।
[2]तान्येवात्रैव युक्तानि संक्षिप्य कथयामि ते ॥ १२

अयं वेदार्थ[3]समितः पुरुषार्थसुधानिधिः ।
भुक्तिं मुक्तिं च कुरुते शृण्वतां पठतामपि ॥ १३

नमो व्यासाय गुरवे महते महतामपि ।
संसारानलतप्तानां यस्य [4]सूक्ती रसायनम् ॥ १४

ब्रह्माणं विष्णुमीशानं गणेशं वागधीश्वरम् ।
श्रीकण्ठञ्च भजन् वक्ष्ये पुरुषार्थसुधानिधिम् ॥ १५

पुरा हि नैमिशारण्ये सत्रे द्वादशवार्षिके ।
[5]निर्वृत्ते मुनयस्सूतमपृच्छन् रोमहर्षणम् ॥ १६

---

1. 8, 9, 10 श्लोकाः क. ख. पुस्तकयोर्न दृश्यन्ते
2. क. ख. तान्येवात्रोपयुक्तानि
3. क. ख. संयुक्तः
4. क. ख. सूक्तम्
5. ख. निवृत्ते

ऋषयः—

अस्मिन् बहुक्रिया[1]मन्त्रे सत्रे सर्वविदां वर ।
कथास्त्वयोदिताः सम्यगस्माभिर्नावधारिताः ॥ १७

[2]तास्ताः कथा भगवता व्यासेनोक्ताः सविस्तरम् ।
[3]तास्तास्संक्षिप्य कथय कर्मैतत्सफलं भवेत् ॥ १८

सूतः—

[4]व्यासं वसिष्ठनप्तारं शक्तेः पौत्रमकल्मषम् ।
पराशरात्मजं वन्दे शुकतातं तपोनिधिम् ॥ १९

शृण्वन्तु मुनयस्सर्वे समाधाय दृढं मनः ।
यत्पृष्टमिह युष्माभिरधुना तद्ब्रवीमि वः ॥ २०

स एष हि चतुस्स्कन्धः पुरुषार्थसुधानिधिः ।
तत्रादौ धर्ममाहात्म्यं ब्राह्मणानां प्रशंसनम् ॥ २१

[5]तन्निन्दाद्रोहकथनं बन्धोक्तिः [6]पूर्वकर्मणः ।
गार्हस्थ्यञ्च सतीधर्मौ ह्यातिथ्यं पञ्चयज्ञकम् ॥ २२

आर्जवं जनके भक्तिरन्नदत्यागदूषणम् ।
पितरौ च [7]गुरुस्वामिभार्यापुत्रा इति क्रमात् ॥ २३

पञ्च तीर्थानि पूजार्हस्तत्क्रमस्तरुपुत्रता ।
[8]ब्रह्मस्वहारिणो दोष ऋतुकालस्य पालनम् ॥ २४

गुरोरधर्मवचनोल्लङ्घनेन[9] च दुष्कृतम् ।
गुरावननुकूलेऽपि निर्वाहः शुभकर्मणाम् ॥ २५

देवतालयनिर्माणं तस्य सम्मार्जनं स्तुतिः ।
स्नानगन्धप्रसूनानां माहात्म्यं धूपदीपयोः ॥ २६

---

1. क. ख. तन्त्रे
2. अ. पुस्तकेऽर्धमिदं नास्ति
3. क. संक्षिप्य कथयाद्य त्वं
4. क. ख. पुस्तकयोरयं श्लोको नास्ति
5. क. ख. तान्निन्दादोष
6. क. ख. पूर्वकर्मणाम्
7. क. गुरुः स्वामी भार्या पुत्राः
8. क. ख. ब्रह्मस्वहरणे
9. क. ख. दोषवर्जनं

नैवेद्यञ्च तथा [1]नित्यं जपो मन्त्रः प्रदक्षिणम् ।
[2]ध्वजारोपणमाहात्म्यं शिवपूजाफलं तथा ॥ २७

तिलान्नगोभूकन्यानां दानानि च गृहस्य च ।
विद्यादानं तटाकस्य निर्माणं [3]पादरक्षणम् ॥ २८

तत्रादौ धर्ममाहात्म्यं शृण्वन्तु प्रवदामि वः ।
शौनकेन पुरा प्रोक्तं [4]चित्रकेतुमहीभुजे ॥ २९

शौनकः—

शृणु राजन् परं धर्मं सर्वलोकहितावहम् ।
यस्य श्रवणमात्रेण पूतो भवति मानवः ॥ ३०

संसारार्णवमग्नस्य जन्तोस्त्रस्तस्य [5]मृत्युतः ।
आधारो धर्म एव स्यान्न [6]त्वर्थो न च बान्धवाः ॥ ३१

[7]अर्थबन्धुसहायोऽपि नाधर्मः स्वर्गमाप्नुयात् ।
अर्थबन्धुविहीनोऽपि धर्मिष्ठः स्वर्गमाप्नुयात् ॥ ३२

नास्ति धर्मात्परो लाभो नास्ति धर्मात्परं धनम् ।
नास्ति धर्मात्परं तीर्थं नास्ति धर्मात्परा गतिः ॥ ३३

दारा [8]ह्यपत्यं भृत्याश्च बान्धवाः प्रियवादिनः ।
गच्छन्तं नानुगच्छन्ति धर्म एवानुगच्छति ॥ ३४

एतद्विचार्य मतिमांस्तस्माद्धर्मं समाचरेत् ।
[9]धर्मवान् सर्वतो मुक्तो धर्मवान् सर्वतस्सुखी ॥ ३५

धर्मिष्ठो दिवि शक्राद्यैः पूज्यते बहुपूजया ।
[10]अन्तकेनापि धर्मिष्ठः पूज्यते नात्र संशयः ॥ ३६

---

1. क. ख. गीतं तपः स्तोत्रं
2. क. ख ध्वजारोहण
3. क. ख. पान्थ
4. क. ख. चित्रकाय
5. क. ख. मृत्युना
6. क. ख. ह्यर्थो:
7. इदमर्धं अ. पुस्तके नास्ति
8. क. ख. अपत्यं
9. अ. पुस्तके इदमर्धं नास्ति
10. अ. पुस्तके इदमर्धं नास्ति

योे धर्मकृद्धर्मकाले धर्मं स्वार्थं विधाय च ।
दृष्ट्वा न विस्मरति चेत्तेऽपि यास्यन्ति निर्वृतिम् ॥ ३७

अस्मिन्नर्थे पुरावृत्तं श्रृण्वन्तु मुनयो [1]महत् ।

सूतः—

अवन्तिविषये कश्चिदभूद्ब्राह्मणपुङ्गवः ॥ ३८

शिवस्वामीति विख्यातो [2]धर्मस्वामिसुतो नृप ।
कौण्डिन्यगोत्रजः शान्तो धर्मैक[3]धृतमानसः ॥ ३९

पितर्युपरते [4]काले तीर्थयात्रां जगाम सः ।
हिमाद्रौ सर्वतीर्थेषु मन्दरप्रभवेषु च ॥ ४०

[5]स्नातस्सर्वेषु तीर्थेषु[6]गङ्गादिषु नदीषु च ।
गङ्गाद्वारं ततो गत्वा नरनारायणाश्रमम् ॥ ४१

दृष्ट्वा निर्वर्त्य तां यात्रां समाप्य द्विजपुङ्गवः ।
सम्भाव्य च मुनीन् सर्वान् यत्नात्तैरपि पूजितः ॥ ४२

अवन्तिनिकटं प्राप्य इदं दध्यौ ततो द्विजः ।
अवन्तिनिकटं भूयो न प्रवेक्ष्याम्यहं ध्रुवम् ॥ ४३

स्वज्ञातिवागुरा[7]बद्धं कथं यास्याम्यहं पुनः ।
लोहदारुमयैः पाशै[8]र्बद्धो जातु विमुच्यते ॥ ४४

पुत्रदारमयैः पाशैर्नरो बद्धो न मुच्यते ।
नेदृशो बलवान् [9]बद्धः पुरुषस्य कुटुम्बिनः ॥ ४५

स्नेहपाशाकृष्टचित्तो न दूरं याति मानवः ।
बन्धात्कदाचिन्मुक्तस्तु पक्षी नायाति वै पुनः ॥ ४६

---

1. क. ख. मम
2. क. ख. धन
3. क. ख. गत
4. ख. कर्तुं
5. क. स्नात्वा । ख. पुस्तके इदं श्लोकार्धं नास्ति
6. क. सागरेषु
7. क. बन्धुः । ख. बद्धः
8. अ. पुस्तके अयं अनन्तरश्च पादो नास्ति
9. क. ख. बन्धः

निर्गतोऽपि पुमान् भूयो गृहान् प्रतिनिवर्तते ।
विन्ध्यस्य दक्षिणे यानि सन्ति तीर्थानि तेष्वहम् ॥ ४७

तीर्थयात्रां विधायैवमागमिष्याम्यहं [1]ध्रुवम् ।

शौनकः—

एवं [2]सञ्चिन्त्य विप्रेन्द्रो निर्गतो दक्षिणां दिशम् ॥ ४८

पुराणि नगरग्रामान् पश्यन्नुपवनानि च ।
ततोऽ[3]टवीं स विन्ध्यस्य [4]प्रविश्य ब्राह्मणोत्तमः ॥ ४९

सिंहान् व्याघ्रान्[5]महाघोरान् ददर्शातिभयङ्करान् ।
तत्र कण्टकिनो वृक्षान् निर्जलं भूतलं नृप ॥ ५०

दावाग्नयो दीर्घशिखास्तत्र तत्र ज्वलन्ति हि ।
वसन्ति राक्षसास्तत्र भूतवेतालजृम्भकाः ॥ ५१

तस्यामटव्यां घोरायामेकाकी स द्विजोत्तमः ।
[6]क्षुत्तृष्णाश्रान्तिमान् राजन् वियन्मध्यगते रवौ ॥ ५२

एकत्र स [7]ददर्शाग्रे मानुषास्थिचयान् बहून् ।
[8]रक्षोभिस्तत्र विष्टोऽहं हा कष्टं किं कृतं मया ॥ ५३

अशोधयित्वाहं मार्गं [9]प्राविशं चेत्युवाच ह ।
राक्षसा निवसन्त्यत्र [10]प्रविष्टा हन्तुमुद्यताः ॥ ५४

नृणां व्यापादितानां वै दृश्यन्ते देहपञ्जराः ।
किं करोमि न जानामि [11]केन मार्गेण याम्यहम् ॥ ५५

मध्याह्नकालः को वात्र [12]न कोऽपि मम गोचरः ।
यो मे प्रत्यादिशेन्मार्ग[13]मभिभूतस्य तृष्णया ॥ ५६

---

1. क. ख. गृहम्
2. क. ख. विचिन्त्य विप्रोऽसौ
3. ख. दरीं
4. क. ख. प्राविशत्
5. क. ख. मृगान्
6. क. ख. क्षुत्तृड्विश्रान्तिमान्
7. क. ख. ददर्शात्र
8. क. ख. ततो भीतमना विप्रो
9. क. ख. प्राविक्षं
10. क. ख. प्रविष्टान्
11. क. ख. येन
12. क. ख. नरोऽपि
13. क. ख. मन्धीभूतस्य-तृट्क्षुधा

शौनकः—

एवं सञ्चिन्तयन् विप्रः पथि गच्छन् भयाकृतीन् ।
पञ्च प्रेतान् ददर्शाग्रे [1]दर्शने विकृताननान् ॥ ५७

अवरुध्य स्थितान् [2]दृष्ट्वा गतप्राण इवाभवत् ।
कम्पन्ते पुरतो रौद्रास्तृणेषु वनमूर्तयः ॥ ५८

शाल्मलीपादपाभ्याशे दस्यवो राक्षसा नु किम् ।
[3]एतैरत्र नृशंसैर्हि भक्षिता मानुषा इमे ॥ ५९

एषामस्थिचयाकीर्णा विवर्णेव क्षितिर्बभौ ।
नूनं मामपि रौद्रास्ते भक्षयिष्यन्ति पापिनः ॥ ६०

अदृष्ट्वा स्वं कुटुम्बं मे मरणं समुपस्थितम् ।
इति चिन्ताकुलमना जलं प्राश्य कमण्डलोः ॥ ६१

आचम्य च शिखां बद्ध्वा हृदि चक्रे परं शिवम् ।
तेषामभ्याश[4]मागत्य दृढात्मा ब्राह्मणोत्तमः ॥ ६२

पप्रच्छ के भवन्तोऽत्र संस्थिता निर्जने वने ।

प्रेताः—

ये केचन वयं विप्र भवन्तं भोक्तुमागताः ॥ ६३

ज्ञातैः किं फलमस्माभिः स्मर तं यस्तव प्रियः ।

ब्राह्मणः—

जरामरणदुःखघ्नः संस्मृतः स महेश्वरः ॥ ६४

तमृते सर्वभूतेशं कोऽन्यो रक्षितु[5]मर्हति ।
यत्पादपङ्कजे चित्ते निधायामलबुद्धयः ॥ ६५

मृत्युं जयन्ति तं [6]मृत्युमृत्युं सञ्चिन्तयाम्यहम् ।
व्याधितो वा दरिद्रो वा दवानल[7]गतोऽपि वा ॥ ६६

---

1. क. ख. दशनैः
2. क. ख. मार्गे
3. क. ख. एतैरति
4. क ख. मागम्य
5. क. ख. मुत्सहेत्
6. क. ख. मृत्योर्मृत्युं
7. क. ख. हतो

यः संस्मरेच्छिवं भक्त्या स मुच्येन्मृत्युसङ्कटात् ।
इति ब्रुवन्तं तं विप्रं पञ्च प्रेतास्सहैव तु ॥ ६७

ग्रसितुं तेऽभ्यधावन्त व्यादितास्या नृपात्मज ।
एकग्रासेन ग्रसतां [1]पथिकोऽङ्गारवन्मुखे ॥ ६८

विप्रो लग्नस्ततस्तस्माद[2]थागत्याब्रुवंश्च ते ।

प्रेताः—

भो भो विप्र वदास्माकं को भवानद्भुतप्रभः ॥ ६९

किं नाम किमधिष्ठानं तेजसा वह्निसन्निभः ।

शिवस्वामी—

अवन्तिभूमिजन्माहं शिवस्वामीति विश्रुतः ॥ ७०

विन्ध्यस्य [3]दक्षिणे भागे तीर्थयात्रार्थमागतः ।
अटव्यां के भवन्तो[4]ऽत्र किंकिनामान एव च ॥ ७१

मां च भक्षयितुं कस्मात् प्रवृत्ताः पापचेतसः ।
कथं विरूपतां प्राप्ताः शाल्मलिद्रुम[5]मागताः ॥ ७२

सर्वमेतद्भवद्भिर्मे कथनीयं यथार्थतः ।

प्रेताः—

अहं स्थूलशरीराख्यो द्वितीयः [6]पीनमेढ्रकः ॥ ७३

पूतिवक्त्रस्तृतीयोऽयं तुरीयः कृशदेहकः ।
पञ्चमो दीर्घजिह्वश्च विद्धि नामानि नो द्विज ॥ ७४

यथा नाम तथैवार्थः सर्वेषां नः पृथक् पृथक् ।

[7]शिवस्वामी—

येन कर्मविपाकेन सर्वेषामीदृशी गतिः ॥ ७५

एतत्सर्वं भवद्भिर्मे वक्तव्यं यदि निश्चितम् ।

---

1. क. ख. खदिराङ्गारवत्
2. क. ख. अथागम्याब्रुवन् वचः
3. क. ख. दक्षिणं भागं
4. क. ख. अस्यां
5. क. ख. माश्रिताः
6. क. ख. प्रिय
7. श्लोकोऽयं अ. पुस्तके नोपलभ्यते

स्थूलशरीरः—

बलाद्ब्रह्मस्व[1]हर्ताहं देवद्रव्यापहृत्तथा ॥ ७६

स्त्रीबालवृद्धलोकानां बहु द्रव्यं हृतं मया ।
तेन पुष्टशरीरत्वान्मेदोमांसचयस्तनौ ॥ ७७

जातौ मे पापिनस्तात बहुदुःखोपजीविनः ।

पीनमेढ्रः—

मया परस्त्रियो विप्र बहुशः कामिताः पुरा ॥ ७८

तेन कर्मविपाके[2]न पीनं मेढ्रमिदं मम ।
क्रिमिभिर्दश्यते चैतत् [3]पूयस्रावाविलं बहु ॥ ७९

शरीरं दह्यतेऽत्यर्थं ममाग्निपतितं यथा ।
एतत्कर्मकृतं [4]विप्र विपाको यस्य भुज्यते ॥ ८०

पूतिवक्त्रः—

असत्यवादी सततं लोकनिन्दाकरस्तथा[5] ।
तेन कर्मविपाकेन पूतिवक्त्रोऽभवं द्विज ॥ ८१

पूयः स्रवति वक्त्रान्मे शोणितेन युतं बहु ।
पूयेन पूर्ण[6]प्राणोऽहं दुर्गन्धेन द्विजोत्तम ॥ ८२

क्रिमिभिर्दश्यते जिह्वा सूचिवक्त्रैरहर्निशम् ।
मुखं ज्वलति मेऽत्यर्थं वह्निनेव द्विजोत्तम ॥ ८३

कृशशरीरः—

सति द्रव्ये मया पूर्वं कुटुम्बं पीडितं तथा ।
न स्वाहा च स्वधाकारो मया पूर्वं कृतः क्वचित् ॥ ८४

नानले हुतपूर्वं मे न [7]विप्रे तूपपादितम् ।
न च भुक्तं स्वयं वापि द्रव्यलोभान्मया द्विज ॥ ८५

---

1. क. ख. हृत्वाहं
2. क. ख. नोच्छूनं
3. ख. पूयस्नाय्वाविलं
4. क. ख. पूर्वे
5. क. ख. सदा
6. क. ख. प्राणो
7. क. ख. विप्रेषु

कुटुम्बं कर्शितं यस्माद्देवाश्च पितरोऽपि च ।
तेन कर्मविपाकेन कृशदेहोऽस्मि वै द्विज ॥ ८६

दीर्घजिह्वः—

नास्तिको भिन्नमर्यादः [1]कृतघ्नोपहतान्तरः ।
वेदनिन्दापरो नित्यं देवद्विजविनिन्दकः ॥ ८७

नास्ति धर्मः कुतस्सत्यं परलोकगतिः कुतः ।
[2]यावज्जीवेत् सुखं जीवेन्नास्ति[3]कम् [कात्] परमं भुवि ॥ ८८

को दृष्ट्वा [4]पुनरायाति प्राणिनां तु गतिं भुवि ।
दुर्गतिं वा परो लोके नास्ति लोकः परस्ततः ॥ ८९

[5]इति श्राद्धादिभिर्दत्तैस्तृप्तिं [6]विन्दन्ति चेन्नराः ।
परलोके ततः कुर्यादुपायं सकलो जनः ॥ ९०

कृत्वा स्वगेहे श्राद्धादि तृप्यन्ते तेन किं मृताः ।
ग्रामान्तरमृतानां तु तृप्तिः किं [7]नोपजायते ॥ ९१

नास्तिकेन मया पूर्वमित्थं संमोहितो जनः ।
तेन कर्मविपाकेन दीर्घजिह्वोऽभवं द्विज ॥ ९२

एतत्सर्वं मया प्रोक्तं स्वकर्मजनितं फलम् ।

शौनकः—

एवं तेषां वचः श्रुत्वा प्रेतानामतिभीषणम् ॥ ९३

अहो दुष्कृतकर्माणो नराः पापानि कुर्वते ।
नाविन्दन्त इमं लोकं पश्चाद्दुःखानि भुञ्जते ॥ ९४

न यमं यम इत्याहुरात्मा हि यम उच्यते ।
आत्मा नियम्यते येन तस्य स्यात्किङ्करो यमः ॥ ९५

इत्थं विचिन्त्य विप्रोऽसौ ततस्तानब्रवीत् [8]पुनः ।

---

1. अ. कृतकोपणकान्तरः
2. क. ख. यावज्जीवं
3. क. ख. लोकः परो ध्रुवम्
4. ख. पुनरायातः
5. क. ख. इह
6. ख. विन्दति चेन्नरः
7. क. ख. नैव
8. क. ख. वचः

ब्राह्मणः—

विमुक्तो यदि युष्माभि[1]स्ततो गच्छाम्यनुज्ञया ॥ ९६

यद्वा भक्षयितव्योऽहं तद्भुङ्ध्वमिह मा चिरम् ।

प्रेताः—

कस्समर्थो भवन्तं तु भोक्तुमग्निसमप्रभम् ॥ ९७

भक्षिता बहवोऽस्माभिर्नैव [2]च [3]त्वादृशा भुवि ।
सुखं गच्छ द्विजश्रेष्ठ पन्थानस्सन्तु ते [4]शिवाः ॥ ९८

भगवन् किञ्चिदिच्छाम[5]स्त्वां प्रार्थयितुमातुराः ।
सतां सप्तपदीं [6]मैत्रं प्रवदन्ति मनीषिणः ॥ ९९

अस्माभिरुच्यमानं तु वचनं कुरु भो द्विज ।
अपराधे [7]हि दुष्टानां साधवो हितकारिणः ॥ १००

छायया सुखयत्येव चन्दनं छेत्तुमागतम् ।
[8]साधवश्चैव लोकस्य हितमेक चरन्ति हि ॥ १०१

तत्समुद्धर पापान्नो घोरान्नरकसङ्कटात् ।
न मित्रं त्वामृते नोऽस्ति यो न उद्धरति द्विज ॥ १०२

ब्राह्मणः—

केन पुण्यप्रभावेण भवन्तस्[9]सकला ध्रुवम् ।
प्रेतत्वात्तु विमुच्यन्ते कारणं कथयन्तु मे ॥ १०३

प्रेताः—

विन्ध्याद्रिदक्षिणे भागे दण्डकारण्यमस्ति वै ।
तन्मध्ये विरजं तीर्थं सर्वपापप्रणाशनम् ॥ १०४

तत्र गत्वा द्विजाग्र्य त्वमस्मानुद्दिश्य निर्वप ।
एवमुक्त्वा ततः [10]प्रेतास्तत्रैवान्तर्हिता नृप ॥ १०५

---

1. क. ख. तद्वो
2. क. ख. ते
3. ख. त्वादृशो
4. क. ख. शुभाः
5. क. ख. स्सं
6. ख. मैत्रीं
7. क. ख. अपि
8. क. ख. पुस्तकयोरिदमर्धमनन्तरश्च श्लोको नास्ति
9. क. ख. सकला द्रुतम्
10. क. ख. सर्वे

[1]स हि विप्रस्ततस्तूर्णं तत्तीर्थं प्राप्य सादरम् ।
माघकृष्णचतुर्दश्यां [2]विरजक्षेत्रमुत्तमम् ॥ १०६

तत्र स्नात्वा द्विजश्चक्रे शिवरात्रिव्रतं नृप ।
रात्रौ जागरणं कृत्वा सूर्ये विमल उद्गते ॥ १०७

तत्रत्यां तीर्थयात्रां तु [3]क्रमेण विदधे द्विजः ।
पितृयज्ञं ततः कृत्वा स्वपितृभ्यो ददौ द्विजः ॥ १०८

पिण्डान् सस्मार तत्रैव पञ्च प्रेतान् पुरेक्षितान् ।
तानुद्दिश्य द्विजवरश्चक्रे श्राद्धादिकाः क्रियाः ॥ १०९

ततो दिव्यशरीरास्ते [4]मकुटादिविभूषिताः ।
अप्सरोभि[5]र्वृतैर्हैमैर्विमानैर्दिव्यवाससः ॥ ११०

दिव्यस्रग्गन्धभूषाढ्या गन्धर्वैरुपशोभिताः ।
संस्थितास्तेऽब्रुवन् [6]प्रेतास्तं [7]विप्रेन्द्रमिदं वचः ॥ १११

भो भो द्विजवर स्वर्गं यास्यामस्त्वत्प्रसादतः ।
त्यक्त्वा पापशरीराणि सर्वे दिव्यवपुर्धराः ॥ ११२

नरके पच्यमानं य उद्धरेत्प्राणिनं द्विज ।
तस्य पुण्यस्याश्वमेधाः कलां नार्हन्ति षोडशीम् ॥ ११३

आर्तान् दुःखपरीताङ्गान् प्राणिनः पापिनोऽपि हि ।
धर्मं दत्वा चोद्धरेद्यस्सोऽपि पापात् [8]विमुच्यते ॥ ११४

इत्युक्त्वा तं द्विजं राजन् प्रेतास्ते दिव्यरूपिणः ।
स्वर्गलोकं गतास्सर्वे प्रसादाच्च द्विजन्मनः ॥ ११५

सोऽपि विप्रवरो भूयो विशेषाद्धर्मतत्परः ।
स्नात्वा सर्वेषु तीर्थेषु स्वाधिष्ठानमुपागमत् ॥ ११६

---

1. क. ख. सोऽपि विप्रवरः
2. क. ख. विरजं तीर्थं
3. क. चक्रेण
4. क. ख. मुकुटादिविभूषणाः
5. क. ख. र्युते हैमे विमाने
6. क. ख. सर्वे
7. क. ख. विप्रेश
8. क. ख. प्रमुच्यते

एवं धर्म[1]परः प्राज्ञो धर्ममेवाचरेत्सदा ।
धर्मेणोत्तारयेत्सर्वान् धर्मान्मोक्षं प्रयाति हि ॥ ११७

धर्मो ददाति धनमक्षयमुत्तमं तु[2]
धर्मो ददाति पदमक्षयमच्युतस्य ।
धर्मो ददाति विमलां श्रियमात्मसौख्यं
धर्मो ददाति बहुपुत्रयशांसि नृणाम् ॥ ११८

सूतः—

इति श्रुत्वा महीपोऽपि शौनकाद्धर्मतत्परः ।
धर्ममेवाचरन्नित्यं धर्मनिष्ठो बभूव ह ॥ ११९

तस्माद्धर्मस्समस्तानां प्राणिनां सद्गतिप्रदः ।
पुमर्थेष्वपि सर्वेषु धर्ममेव परं विदुः ॥ १२०

[3]धर्म एव च साधूनां सर्वापत्तारणक्षमः ।
अतस्सर्वप्रकारेण बुद्धिमान् धर्ममाचरेत् ॥ १२१

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे धर्ममाहात्म्य-
कथनं नाम प्रथमोऽध्यायः ।

---

1. क. रतः
2. क. ख. हि
3. क. ख. धर्मस्सहायः

## ॥ द्वितीयोऽध्यायः ॥

### भूसुरमाहात्म्यकथनम्

सूतः—

धर्मस्य [1]ब्राह्मणो मूलं मन्त्राणामास्पदं द्विजाः ।
निदानमागमार्थानां विशेषादेव भूसुराः ॥ १

कर्मणा मनसा वाचा सम्पूज्या ब्राह्मणोत्तमाः ।
तुष्टा यदि प्रदास्यन्ति ब्राह्मणास्सुमहत् पदम् ॥ २

अस्मिन्नर्थे पुरावृत्तमितिहासं वदामि वः ।
कथितं धर्मपुत्राय कृष्णेनामिततेजसा ॥ ३

युधिष्ठिरः—

त्रैलोक्ये सर्वभूतानां कः श्रेष्ठो यदुपुङ्गव ।
केन वा पूज्यसे त्वं च तुष्यसे केन कर्मणा ॥ ४

श्रीकृष्णः—

ब्राह्मणस्सर्ववर्णानां [2]परमो गुरुरुच्यते ।
तस्मादभ्यधिकः को वा न भूतो न भविष्यति ॥ ५

ब्राह्मणस्सम्भवेनैव देवानामपि दैवतम् ।
[3]यस्यान्नेन सदाश्नन्ति हव्यानि त्रिदिवौकसः ॥ ६

कव्यानि चैव पितरः किंभूतमधिकं ततः ।
अविद्यो वा सविद्यो वा ब्राह्मणो दैवतं महत् ॥ ७

अवध्यस्सर्वभूतानां ब्राह्मणो ह्यनलोपमः ।
भूतानामग्रभुग्विप्रो वर्णश्रेष्ठः परो गुरुः ॥ ८

विप्राः परा गतिर्मह्यं [4]ममरूपा हि सर्वदा ।
बहवोऽपि न जानन्ति नरा ज्ञानबहिष्कृताः ॥ ९

---

1. क. ख. ब्राह्मणा
2. क. ख. भूतानां
3. क. ख. यस्यास्येन
4. क. ख. मम रूपं हि ते सदा

यथाहं द्विजरूपेण चरामि पृथिवीमिमाम् ।
नातः पवित्रम[1]परं न पुण्यमधिकं ततः ॥ १०

अर्चयेत्सततं भक्त्या ब्राह्मणान् भूमिदैवतान् ।
ब्राह्मणे पूजिते नित्यं पूजितोऽहं न संशयः ॥ ११

तुष्टोऽहं विप्रसन्तुष्टया [2]ममरूपा हि भूसुराः ।
ब्राह्मणेषु च तुष्टेषु तुष्यन्त्यखिलदेवताः ॥ १२

तेषामेव हि संमानान्महत्पदम[3]वाप्नुयात् ।
विप्राणां पूजया प्राप्तमनेकैस्सुमहत्पदम् ॥ १३

व्याधोऽप्यासीत्सत्यतपा ऋषिर्ब्राह्मणसेवया ।
तदेव वक्ष्ये संक्षिप्य शृणु त्वं धर्मनन्दन ॥ १४

श्रीकृष्णः—

आरुणिर्नाम विप्रर्षिः [4]पूर्वे कल्पे महानभूत् ।
सोऽरण्यमगमत्किञ्चित्तपोऽर्थी ब्राह्मणोत्तमः ॥ १५

तपस्तेपे ततस्तस्मिन्नुपवासपरायणः ।
[5]देविकायास्तटे रम्ये सोऽवसद्ब्रह्मवत्सलः ॥ १६

कदाचिदभिषेकाय स जगाम महानदीम् ।
तत्र स्नात्वा जपन् विप्रो ददर्शायान्तमग्रतः ॥ १७

व्याधं महाधनुष्पाणिं रक्तनेत्रं [6]सुभीषणम् ।
तं द्विजं हन्तुमायात्स वल्कलानां जिघृक्षया ॥ १८

तं दृष्ट्वा क्षुभितो विप्रो व्याधं भयनिपीडितः ।
ध्यायन्नारायणं देवं तस्थौ [7]मृतमयो द्विजः ॥ १९

तं तथैव स्थितं दृष्ट्वा व्याधो भीत इवाग्रतः ।
विहाय सशरं चापं ततो वचनमब्रवीत् ॥ २०

---

1. क. ख. तुलं
2. क. ख. धर्मरूपं
3. क. ख. वाप्यते
4. क. ख. पूर्वकल्पेऽभवत्पुरा
5. इतस्सार्धः श्लोकः अ. पुस्तके नास्ति
6. क. ख. विभीषणम्
7. क. ख. तत्रैव स

व्याधः—

हन्तु[1]मिच्छन्नहं ब्रह्मन् भवन्तं प्रागिहागतः ।
इदानीं दर्शनाच्चेऽत्र सा मतिः क्व गता विभो ॥ २१

पुरुषाणां सहस्राणि नारीणामयुतानि च ।
विहतानि मया ब्रह्मन् वृत्तिहेतोः कुटुम्बिना ॥ २२

न च मे[2]ऽभ्यधिकं वित्तं कदाचिदपि जायते ।
इदानीं तप्तुमिच्छामि तपोऽहं त्वत्समीपतः ॥ २३

उपदेशप्रदानेन प्रसादं कर्तुमर्हसि ।
एवमुक्तस्तदा विप्रो नोत्तरं प्रत्यपद्यत ॥ २४

ब्रह्महा पापकर्मेति मत्वा ब्राह्मणपुङ्गवः ।
[3]अनुक्तोऽपि स धर्मेप्सुर्व्याधस्तत्रैव तस्थिवान् ॥ २५

तस्याश्रमे द्विजस्यैव वृक्षमूलमुपाश्रितः ।
कस्यचित्त्वथ कालस्य तां नदीमगमत्किल ॥ २६

व्याघ्रः क्षुधान्वितः साधुं [4]विप्रं हन्तुं समुद्यतः ।
अन्तर्जलगतं विप्रं यावद्व्याघ्रो जिघृक्षति ॥ २७

तावद्व्याधेन विद्धोऽसौ सद्यः प्राणैर्वियोजितः ।
विप्रोऽप्यन्तर्जलगतः श्रुत्वा तच्छब्द[5]माकुलः ॥ २८

नमो नारायणायेति वाक्यमुच्चैरुवाच ह ।
व्याघ्रेणापि श्रुतो मन्त्रः प्राणैः कण्ठगतैस्तदा ॥ २९

तस्माद्व्याघ्रशरीरात्तु निर्गतः पुरुषः [6]किल ।
अब्रवीद्यामि तं देशं यत्र विष्णुस्सनातनः ॥ ३०

त्वत्प्रसादा[7]दहं विप्र मुक्त[8]पाप्मा निरामयः ।
इत्युक्तो ब्राह्मणः प्राह कोऽसि त्वं पुरुषर्षभ ॥ ३१

---

1. क. ख. मिच्छुरहं
2. क. ख. ह्यधिकं
3. क. ख. अनुक्तेऽपि
4. क. ख. तं विप्रं हन्तुमुद्यतः
5. ख. माकुलम्
6. क. ख. क्वचित्
7. क. ख. न्मुनिश्रेष्ठ
8. क. ख. पापो

सोऽब्रवीदस्मि राजेन्द्रो दीर्घबाहुरिति श्रुतः ।
अहं जानामि वेदार्थानहं वेद्मि शुभाशुभम् ॥ ३२

ब्राह्मणैर्नैव मे कार्यं किं वस्तु ब्राह्मणा इति ।
मामेवंवादिनं विप्रास्सर्वे क्रोधसमन्विताः ॥ ३३

ददुः शापं दुराधर्षं क्रूरो व्याघ्रो [1]भवत्विति ।
ततस्ते ब्राह्मणास्सर्वे प्रणिपत्य प्रसादिताः ॥ ३४

उक्ताश्चानुग्रहार्थं तु [2]त ऊचुर्मामिदं पुरा ।
यदेषुघातं लब्ध्वा तु प्राणैः कण्ठगतैर्भवान् ॥ ३५

श्रोष्यते द्विजमुख्यात्तु नमो नारायणेति च ।
तदा स्वर्गगतिस्तुभ्यं भविता नात्र संशयः ॥ ३६

विप्रद्वेषफलं भुक्तं सुखी च तव दर्शनात् ।
एवमुक्त्वा गतः स्वर्गं स राजा वीतमत्सरः ॥ ३७

ब्राह्मणोऽपि मुदा युक्तस्तं व्याधं प्रत्यभाषत ।
इदानीं तव पापानि देविकाभिषवेण च ॥ ३८

मद्दर्शने[3]नापि चिरं मम शुश्रूषणेन च ।
नष्टानि शुद्धदेहोऽसि साम्प्रतं नात्र संशयः ॥ ३९

तपः कुरुष्व साधो त्वं नियतो मम सन्निधौ ।
एवमुक्तस्स विप्रेण द्विज[4]भक्तस्समाहितः ॥ ४०

तपस्तेपे निराहार[5]स्तमृषिं मनसा स्मरन् ।
अथ कालेन स मुनिः [6]प्रसादमकरोत्तदा ॥ ४१

[7]तमस्थिशेषं व्याधं तु क्षुधा दुर्बलतां गतम् ।
दृष्ट्वा प्रोवाच शास्त्राणि सर्वे वेदाश्च सङ्ग्रहाः ॥ ४२

---

1. क. ख. भवेदिति
2. क. ख. तत ऊचुरिदं
3. क. ख. न च
4. क. ख. भक्तिसमन्वितः
5. क. ख. स्तं गुरुं
6. क. ख. सुप्रीतस्तपसास्य वै
7. अ. पुस्तके इतः सार्धः श्लोको नास्ति

ब्रह्मविद्या पुराणानि सेतिहासानि कृत्स्नशः ।
[1]सदा सर्वाणि शास्त्राणि प्रत्यक्षाणि भवन्तु ते ॥ ४३

एवं प्रादाद्वरं तस्मै द्विजोऽसौ नाम चाकरोत् ।
भवान् सत्यतपा नाम ऋषिराद्यो भविष्यति ॥ ४४

एवं दत्तवरो व्याधः कृतकृत्योऽभवत्किल ।
एतच्छ्रुत्वा धर्मपुत्रः कृष्णाद्विप्रार्चनं व्यधात् ॥ ४५

तस्मात् द्विजप्रसादेन किं न सिध्यति भूसुराः ।
पूजनीया द्विजास्तस्मात् पूजितास्सर्वसिद्धिदाः ॥ ४६

इति श्रीपुरुषार्थसुधानिधौ धर्मस्कन्धे ब्राह्मणमाहात्म्य-
कथनं नाम द्वितीयोऽध्यायः

1. क. ख. मत्प्रसादप्रभावेन

## ॥ तृतीयोऽध्यायः ॥

### ब्राह्मणावमानकथनम्

सूतः—

ब्राह्मणा हि महात्मानो वेदविद्यासमन्विताः ।
तेषां निन्दा न कर्तव्या नावज्ञा च कदाचन ॥ १

सत्यं सत्यं पुनस्सत्यमुद्धृत्य भुजमुच्यते ।
[1]स्मर्तव्या ब्राह्मणा वेदाः स्मर्तव्यः पुरुषोत्तमः ॥ २

[2]ब्राह्मणा जङ्गमा देवाः कूटस्थः पुरुषोत्तमः ।
तयोरन्यतराच्छ्रेयो लोकेषु च न विद्यते ॥ ३

ब्राह्मणानां परिभवं यः करोति सुदुर्मतिः ।
मन्त्रतन्त्रक्रियाहीनो जायते [3]दुष्टयोनिषु ॥ ४

[4]तदर्थे श्रूयते कश्चिदितिहासः पुरातनः ।
युधिष्ठिराय [5]कथितः पुरा कृष्णेन धीमता ॥ ५

श्रीकृष्णः—

कश्चिदासीद्[6]द्विजद्रोही पिशुनः क्षत्रियाधमः ।
परपीडारतः क्षुद्रः स्वभावादपि निर्घृणः ॥ ६

निन्दिता ब्राह्मणास्तेन ह्यवज्ञाताश्च [7]सर्वशः ।
तेन दोषेण महता चाल्पायुरभवन्नृप ॥ ७

स त्वायुषि परिक्षीणे जज्ञे घोरो निशाचरः ।
विप्रावमानजातेन पापेन कलुषाशयः ॥ ८

---

1. क. ख. अनिन्द्या
2. अ. पुस्तके श्लोकार्धमिदं न दृश्यते
3. क. ख. कष्ट
4. क. ख. अत्रार्थे
5. क. ख. संप्रोक्तः
6. क. ख. नरेन्द्रो हि
7. क. ख. सर्वदा

